काशीस्थ राजकीय प्रथम तथा मध्यम परीक्षा पाठ्य निर्धारित—
'मणिप्रभा' हिन्दी टीका तथा 'अमरकौमुदी' टिप्पणी के सहित

# १ अमरकोष ( सम्पूर्ण ) ।

( टीकाकार—व्याकरण-साहित्याचार्य साहित्यरत्न श्रीहरगोविन्द मिश्रजी, काशी

'मणिप्रभा' नामक हिन्दी व्याख्यामें—मूल श्लोकोंके पर्याय (नाम) सन्दिग्ध शब्दोंके शुद्ध ( प्रातिपदिकावस्थाका ) स्वरूप ( जैसे—राजा = राजन् विद्वान् = विद्वस्,……), लिङ्ग, पाठान्तर और मतान्तरके पर्याय, अन्य ग्रन्थ या कोषोंमें मिलनेवाले आंशिक समानाकार बाहरी शब्द, तथा हिन्दीमें अ दिये गये हैं और कठिन विषय उदाहरणादिसे विशद किये गये हैं । क्षेपक श्लोकों की व्याख्या भी मूलके समान ही विशद रूपसे की गई है ।

'अमरकौमुदी' नामक संस्कृत टिप्पणीमें—वेद, वेदाङ्ग, स्मृति, पुराण औ साहित्यादि अनेक ग्रन्थोंसे प्रमाण-वचन, पाठान्तर आदि, तथा अक्षौहिणी सेना, मन्वन्तर काल, द्रोण खारी आदि प्रमाण ( तौल ) इत्यादिके अनेक च मी दिये हैं जिनसे अनेक श्लोकोंके आशय अनायास ही समझ में आ जाते हैं परिशिष्टमें विशेष आवश्यकीय विषय तथा अन्तमें मूल, क्षेपक और समानाकार य पाठान्तर आदि बाहरी शब्दोंकी अकारादि क्रमसे सूची और ग्रन्थारम्भमें गवेषणापू विस्तृत भूमिका देकर ग्रन्थको परमोपयोगी बनाया गया है । कागज छपाई आ सब कुछ अत्युत्तम रहनेपर भी मूल्य लागतमात्र सजिल्द पुस्तक का केवल २

## २ अमरकोश—"मणिप्रभा" और "अमरकौमुदी" नामक

परीक्षोपयोगी भाषाटीका तथा टिप्पणी सहित प्रथमकाण्ड मूल्य ।)

## ३ अमरकोश—"मणिप्रभा" और "अमरकौमुदी" नामक

परीक्षोपयोगी भाषाटीका तथा टिप्पणी सहित द्वितीयकाण्ड मू० ।=)

# ४ अमरकोष—मूल ( गुटका )

अनेकार्थध्वनिमञ्जरी-द्विरूपकोश-एकाक्षरकोश सहित ।

४॥ × ५ इंच का जेबी गुटका मूल्य बहुत अल्प ।)

## ५ अमरकोष—मूल । केवल प्रथम काण्ड मात्र । मूल्य )॥

## ६ अमरकोष—मूल । केवल द्वितीय काण्ड मात्र । मूल्य =

---

❀ श्रीः ❀

→ हरिदास—संस्कृत—ग्रन्थमाला ←

३०

॥ श्रीः ॥

काशीस्थ—मध्यमपरीक्षा—तृतीयखण्ड—

पाठ्यग्रन्थः—

सप्तमवर्गादारभ्य—दशमवर्गपर्यन्तः।

# अमरकोशः



'मणिप्रभा' नामक भाषाटीकासहितः

## द्वितीयकाण्डस्य ७—१० वर्गाः।



प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी।

१९४३

॥ श्रीः ॥

# अमरकोशः

## द्वितीयः काण्डः

### सप्तमवर्गादारभ्य–दशमवर्गपर्यन्तः ।

### ७. अथ ब्रह्मवर्गः ।

१ सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः सन्तानो २ वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥
३ विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम् ।
४ राजबीजी राजवंश्यो ५ बीज्यस्तु कुलसंभवः ॥ २ ॥
६ महाकुलकुलीनार्यसभ्यसज्जनसाधवः ।
७ ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥
आश्रमोऽस्त्री ८ द्विजात्यग्रजन्मभूदेववाडवाः ।

---

१–सन्ततिः (स्त्री), गोत्रम् , जननम् , कुलम् (३ न), अभिजनः, अन्वयः, वंशः, अन्ववायः, सन्तानः (६ पु), 'वंश, कुल, खान्दान' के ९ नाम हैं ॥ २–वर्णः (पु), 'ब्राह्मण, क्षत्रिय, वैश्य और शूद्र ये ४ 'वर्ण' हैं ॥ ३–चातुर्वर्ण्यम् (न), 'ब्राह्मण आदि पूर्वोक्त चार वर्णों के समुदाय' का १ नाम है ॥ ४–राजबीजी (=राजबीजिन्), राजवंश्यः (२ पु), 'राजकुलमें उत्पन्न' के २ नाम हैं ॥ ५–बीज्यः, कुलसंभवः (२ पु), 'कुलमें उत्पन्न' के २ नाम हैं ॥ ६–महाकुलः (+माहाकुलः), कुलीनः (+कुल्यः, कौलेयकः), आर्यः, सभ्यः, सज्जनः, साधुः (६ पु), 'सज्जन, उत्तम कुलमें उत्पन्न' के ६ नाम हैं ॥ ७–ब्रह्मचारी (=ब्रह्मचारिन्), गृही (=गृहिन्), वानप्रस्थः, भिक्षुः (४ पु), ये चार 'आश्रम' शब्दवाच्य हैं अर्थात् आश्रमः (पु न), 'ब्रह्मचर्याश्रमः, गृहस्थाश्रमः, वानप्रस्थाश्रमः, संन्यासाश्रमः' (४ पु न), ये ४ 'आश्रम' हैं ॥ ८–द्विजातिः (+द्विजः), अग्रजन्मा (=अग्रजन्मन्), भूदेवः (+महीसुरः, भूसुरः, …),

विप्रश्च ब्राह्मणा१ऽसौ षट्कर्मा यागादिभिर्वृतः ॥ ४ ॥
२ विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः कोविदो बुधः।
धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कविः ॥ ५ ॥
धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः।
दूरदर्शी दीर्घदर्शी ३ श्रोत्रियच्छान्दसौ समौ ॥ ६ ॥
४ 'मीमांसको जैमिनीये ५ वेदान्ती ब्रह्मवादिनि (१)
६ वैशेषिके स्यादौलूक्यः ७ सौगतः शून्यवादिनि(२)
८ नैयायिकस्त्वक्षपादः ९स्यात्स्याद्वादिक आर्हकः (३)

---

वाडवः, विप्रः, ब्राह्मणः (६ पु), 'ब्राह्मण' के ६ नाम हैं ॥ १-षट्कर्मा (=षट्कर्मन्, पु), 'यज्ञ करना, पढ़ना, दान देना, यज्ञ कराना, पढ़ाना और दान लेना: इन ६ कर्मोंसे युक्त ब्राह्मण' का १ नाम है ॥ २-विद्वान् (=विद्वस्), विपश्चित्, दोषज्ञः, सन् (=सत्), सुधीः, कोविदः, बुधः, धीरः, मनीषी (=मनीषिन्), ज्ञः, प्राज्ञः (+प्रज्ञः), संख्यावान् (=संख्यावत्), पण्डितः, कविः, धीमान् (=धीमत्), सूरिः(+सूरी=सूरिन्), कृती (=कृतिन्), कृष्टिः, लब्धवर्णः, विचक्षणः, दूरदर्शी (=दूरदर्शिन्। +दूरदृक्=दूरदृश्), दीर्घदर्शी (=दीर्घदर्शिन्। २२ पु), 'विद्वान्' के २२ नाम हैं ॥ ३-श्रोत्रियः, छान्दसः (२ पु), 'वेद पढ़नेवाले ब्राह्मण' के २ नाम हैं ॥ ४-[मीमांसकः, जैमिनीयः (२ पु),'मीमांसक' अर्थात् 'मीमांसा शास्त्रको जाननेवाले' के २ नाम हैं] ॥ ५-[वेदान्ती (=वेदान्तिन्), ब्रह्मवादी (=ब्रह्मवादिन्। २ पु), 'वेदान्ती' अर्थात् 'वेदान्त शास्त्र जाननेवाले' के २ नाम हैं] ॥ ६-[वैशेषिकः, औलूक्यः (२ पु), 'कणाद सम्मत द्रव्य' आदि ("द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय, अभाव") 'सातपदार्थोंको माननेवाले' के २ नाम हैं] ॥ ७-[सौगतः, शून्यवादी (=शून्यवादिन्। २ पु), 'संसारका कारण शून्य (कोई नहीं) है इस सिद्धान्तको माननेवाले नास्तिक' के २ नाम हैं] ॥ ८-[नैयायिकः, अक्षपादः (+आक्षपादः। २ पु), गौतमसम्मत प्रमाण आदि ("प्रमेय, संशय, प्रयोजन, दृष्टान्त, सिद्धान्त, अवयव, तर्क, निर्णय, वाद, जल्प, वितण्डा, हेत्वाभास, छल, जाति, निग्रहस्थान") सोलह पदार्थों को माननेवाले नैयायिक' के २ नाम हैं] ॥ ९-[स्याद्वादिकः, आर्हकः (२ पु), 'मोक्ष है तो है,

१ चार्वाकलौकायतिकौ २ सत्काय साङ्ख्यकापिलौ' ( ४ )
३ उपाध्यायोऽध्यापकोऽथ स्यान्निषेकादिकृद्गुरुः ।
५ मन्त्रव्याख्याकृदाचार्य ६ आदेष्टा त्वध्वरे व्रती ॥ ७ ॥
यष्टा च यजमानश्च ७ स सोमवति दीक्षितः ।
८ इज्याशीलो यायजूको ९ यज्वा तु विधिनेष्टवान् ॥ ८ ॥
१० स गीर्पतीष्ट्या स्थपतिः ११ सोमपीथी तु सोमपाः ।
१२ सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥
१३ अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।

---

और नहीं है तो न हो इस सिद्धान्तको माननेवाले' के २ नाम हैं] ॥ १-[चार्वाकः, लौकायतिकः (२ पु), 'बौद्ध' अर्थात् 'बुद्धदेवके मतानुयायी' के २ नाम हैं]॥ २-[साङ्ख्यः, कापिलः (२ पु), 'कपिल मुनिसम्मत सांख्य शास्त्र के सिद्धान्तको माननेवाले' के २ नाम हैं] ॥ ३-उपाध्यायः, अध्यापकः (२ पु), "उपाध्याय" अर्थात् 'वेदके एकदेश को या वेदाङ्गोंको वृत्तिके लिये पढ़ानेवाले' के २ नाम हैं ॥ ४-गुरुः (पु), 'गुरु' अर्थात् 'निषेकादि संस्कारको सविधि करके अन्नादि से पालन करनेवाले' का १ नाम है ॥ ५-आचार्यः (पु),'आचार्य' अर्थात् 'मन्त्रोंकी व्याख्या करने वाले या शिष्यका यज्ञोपवीत संस्कार कर कल्प और रहस्यके सहित वेदको पढ़ानेवाले ब्राह्मण' का १ नाम है ॥ ६-व्रती (=व्रतिन् ), यष्टा (=यष्टृ), यजमानः (३ पु), 'यजमान' अर्थात् 'यज्ञ करनेवाले' के ३ नाम हैं ॥ ७-दीक्षितः (पु), 'सोमवत् (अग्निष्टोमादि) यज्ञमें ऋत्विजोंका आदेश देनेवाले यजमान' का १ नाम है ॥ ८-इज्याशीलः, यायजूकः (२ पु), 'वारबार यज्ञ करनेवाले' के २ नाम हैं ॥ ९-यज्वा (=यज्वन् पु), 'विधिपूर्वक यज्ञ किये हुये' का १ नाम है॥ १०-स्थपतिः (पु), 'बृहस्पतिके मन्त्रसे यज्ञ करने वाले' का १ नाम है ॥ ११-सोमपीथी(=सोमपीथीन् । + सोमपीती= सोमपीतिन् ), सोमपाः( + सोमपः । २ पु), 'सोमयज्ञ करनेवाले' के २ नाम हैं ॥ १२-सर्ववेदाः (=सर्ववेदस् पु), 'यज्ञमें सर्वस्व दक्षिणा देनेवाले' का १ नाम है । ("विश्वजित् आदि यज्ञोंमें सर्वस्व दक्षिणा दी जाती है, जैसे—रघुने विश्वजित् यज्ञकर सर्वस्व दक्षिणा दी थी । विश्वजित् आदि यज्ञका यह नाम है यह भा० दी० का मत चिन्त्य है") ॥ १३-अनूचानः (पु), 'व्याकरण आदि

१ लब्धानुज्ञः समावृत्तः २ सुत्वा त्वभिषवे कृते ॥ १० ॥
३ छात्रान्तेवासिनौ शिष्ये ४ शैक्षाः प्राथमकल्पिकाः ।
५ एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥
६ सतीर्थ्यास्त्वेकगुरव ७ऽश्चितवानग्निमग्निचित् ।
८ पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥
९ उपज्ञा ज्ञानमाद्यं स्यात् १० ज्ञात्वारम्भ उपक्रमः ।
११ यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥
१२ पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।

---

१ अङ्गोंके सहित वेदको पढ़नेवाले' का १ नाम है॥ १-समावृत्तः (पु), 'गुरु की आज्ञा पाकर गृहस्थाश्रममें रहने के लिये गुरुकुलसे लौटे हुए ब्रह्मचारी' का १ नाम है ॥ २-सुत्वा (=सुत्वन् पु), 'यज्ञके अन्तमें अवभृथनामक स्नान किये हुए' का १ नाम है ॥ ३-छात्रः, अन्तेवासी (=अन्तेवासिन् ), शिष्यः (३ पु), 'शिष्य, छात्र' के ३ नाम हैं ॥ ४-शैक्षाः, प्राथमकल्पिकाः (२ पु । बहुवचन अविवक्षित होनेसे एकवचन भी होता है ), 'अध्ययनको प्रथम आरम्भ किये हुये ब्रह्मचारी आदि' के २ नाम हैं ॥ ५-सब्रह्मचारिणः (=सब्रह्मचारिन् , पु), 'आपसमें समान वेद, समान व्रत और समान आचारवाले ब्रह्मचारियों' का १ नाम है ॥ ६-सतीर्थ्यः, एकगुरुः (भा० दी० । २), 'सहपाठी, एक गुरुसे पढ़नेवाले' के २ नाम हैं॥ ७-अग्निचित् (पु), 'अग्निहोत्री' का १ नाम है ॥ ८-ऐतिह्यम् (न), इतिह (अव्य०), 'परम्परागत उपदेश' के २ नाम हैं ॥ ९-उपज्ञा (स्त्री), गुरूपदेशके विना उत्पन्न सर्व प्रथम ज्ञान' का १ नाम है। ("जैसे-'वाल्मीकिकी उपज्ञा रामायण है और पाणिनीयकी उपज्ञा अष्टाध्यायी सूत्रपाठ है") ॥ १०-उपक्रमः (पु)'गुरु आदिसे ज्ञान प्राप्त कर आरम्भ करने' का १ नाम है ॥ ११-यज्ञः,सवः,अध्वरः, यागः, सप्ततन्तुः, मखः, क्रतुः (७ पु), 'यज्ञ' के ७ नाम है ॥ १२-पाठः (पु), 'वेदादिपाठ करने' को ब्रह्मयज्ञः (पु); होमः (पु), 'हवन करने' को देव यज्ञः (पु), अतिथीनां सपर्या (स्त्री), 'अन्न जलपान शय्यादि देकर अतिथियोंके सत्कार करने' को नृयज्ञः (पु), तर्पणम् (न), 'अन्न जल पिण्डदान श्राद्ध आदिसे पितरोंको

१ एते पञ्चमहायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥
२ समज्या परिषद्गोष्ठी सभासमितिसंसदः ।
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥ १५ ॥
३ प्राग्वंशः प्राग्घविर्गेहात् ४ सदस्या विधिदर्शिनः ॥
५ सभासदः सभास्तारः सभ्याः सामाजिकाश्च ते ॥ १६ ॥
६ अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् ।
७ आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते ॥ १७ ॥
८ वेदिः परिष्कृता भूमिः ९ समे स्थण्डिलचत्वरे ।

---

सन्तुष्ट करने' को पितृयज्ञः (पु), बलिः (पु), 'बलि वैश्वदेव अर्थात् काकादिको बलि देने या बलिदान करने' को भूतयज्ञः (पु), कहते हैं ॥ १–इन (ब्रह्मयज्ञ, देवयज्ञ, अतिथियज्ञ, पितृयज्ञ और भूतयज्ञ) को पञ्च महायज्ञः (पु), अर्थात् 'पञ्च महायज्ञ' कहते है ॥ २–समज्या, परिषत् (=परिषद् । + पर्षत्=पर्षद्), गोष्ठी, सभा, समितिः, संसत (=संसद्), आस्थानी (७ स्त्री), आस्थानम् (न), सदः (=सदस् न स्त्री), 'सभा' के ९ नाम हैं। ("सम्प्रति सभा शब्दका सामान्यतःव्यवहार किया जाता है") ॥ ३–प्राग्वंशः (पु), 'हवनशालाके पूर्व तरफ यजमानको बैठनेके लिये बनाये हुए स्थान या गृह-विशेष' का १ नाम है ॥ ४–सदस्यः (पु), 'यज्ञमें न्यूनाधिक विधिको देखनेवाले ऋत्विग् विशेष'का १ नाम है ॥ ५–सभासत् (=सभासद्), सभास्तारः, सभ्यः, सामाजिकः (४ पु), 'सभासद' के ४ नाम हैं ॥ ६–अध्वर्युः, उद्गाता (=उद्गातृ), होता (=होतृ । ३ पु), 'यजुर्वेद, सामवेद और ऋग्वेद जाननेवाले' का क्रमशः १–१ नाम है ॥ ७–ऋत्विक् (=ऋत्विज्), याजकः (२ पु), 'यज्ञकरनेवाला यजमान धन आदिसे जिनका वरण करे उन आग्नीध्र आदि (ब्रह्मा, उद्गाता, होता, अध्वर्यु,······१७) यज्ञ करानेवाले ब्राह्मणों' के २ नाम हैं ॥ ८–वेदिः (+ वेदी । स्त्री), यज्ञ के लिये डमरु-तुल्याकर बनाई हुई या साफ की हुई ज़मीन' का १ नाम है ॥ ९–स्थण्डिलम्, चत्वरम् (२ न), 'यज्ञके लिये साफ किये गये स्थान-विशेष' के २ नाम हैं। ("सम्प्रति चत्वर शब्दको चबूतरा के अर्थमें भी प्रयुक्त किया जाता है") ॥

१ चषालो यूपकटकः २ कुम्बा सुगहना वृतिः ॥ १८ ॥
३ यूपाग्रं तर्म ४ निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।
५ दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥
६ अग्नित्रयमिदं त्रेता ७ प्रणीतः संस्कृतोऽनलः ।
८ समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः ॥ २० ॥
९ यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते ।
तस्मिन्नानाय्यो१०ऽथाग्नायी स्वाहा च हुतभुक्प्रिया ॥ २१ ॥
११ ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।
१२ गायत्री प्रमुखं छन्दो—

---

१-चषालः, यूपकटकः (भा० दी० । २ पु), 'यज्ञ-स्तम्भके ऊपर वलयाकार (गोल) बनाये हुए काष्ठ-विशेष' के २ नाम हैं ॥ २-कुम्बा (स्त्री), 'चाण्डाल अन्त्यज आदि यज्ञको न देख सकें इस निमित्त से यज्ञभूमिके चारों तरफ बनाये हुए घेरे' का १ नाम है ॥ ३-यूपाग्रम्, तर्म (=तर्मन् । २ न), 'यज्ञ-स्तम्भके उपरी भाग' के २ नाम हैं ॥ ४-अरणिः (पु स्त्री), 'जिसको परस्परमें रगड़कर यज्ञार्थ अग्नि निकाली जाय उस काष्ठ-विशेष का १ नाम है ॥ ५-दक्षिणाग्निः, गार्हपत्यः, आहवनीयः (३ पु), ये ३ 'अग्निके भेद' हैं ॥ ६-त्रेता (स्त्री) 'दक्षिणाग्नि, गार्हपत्य और आहवनीय; इन तीन अग्नियोंके समुदाय' का १ नाम है ॥ ७-प्रणीतः (पु), 'मन्त्रसे संस्कृत अग्नि' का १ नाम है ॥ ८-समूह्यः, परिचाय्यः, उपचाय्यः (३ पु), 'यज्ञ-सम्बन्धी अग्निका स्थान-विशेष, या स्थान-विशेषकी अग्नि' के ३ नाम हैं ॥ ९-आनाय्यः (पु), 'गार्हपत्य नामक अग्निसे लाकर मन्त्रसे संस्कार कर बनाई हुई दक्षिणाग्नि' का १ नाम है ॥१० अग्नायी, स्वाहा, हुतभुक्प्रिया (+ अग्निप्रिया । ३ स्त्री), 'अग्नि की स्त्री, स्वाहा' के ३ नाम हैं ॥११-सामधेनी, धाय्या (२ स्त्री), 'अग्नि में समिधा (लकड़ी) छोड़ कर अग्निको जलानेमें प्रयोग किये जानेवाले मन्त्र' के २ नाम हैं ॥ १२-छन्दः (=छन्दस् न), गायत्री आदि छन्द' का १ नाम है । उक्था, अत्युक्था, मध्या, प्रतिष्ठा, सुप्रतिष्ठा, गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्ति, त्रिष्टुप्, जगती, अतिजगती, शक्करी, अतिशक्करी, अष्टि, अत्यष्टि, धृति, अतिधृति, कृति, प्रकृति

१ हव्यपाके चरुः पुमान् ॥ २२ ॥
२ आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः ।
३ धुवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥
४ पृषदाज्यं सदध्याज्ये ५ परमान्नं तु पायसम् ।
६ हव्य७कव्ये दैवपित्र्ये अन्ने ८ पात्रं स्रुवादिकम् ॥ २४ ॥
९ ध्रुवोपभृज्जुहू१०र्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।
११ उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ २५ ॥
१२ परम्पराकं शमनं प्रोक्षणं च वधार्थकम् ।
१३ वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥ २६ ॥

---

आकृति, विकृति, संस्कृति, अतिकृति, उत्कृति, ये छब्बीस छन्द होते हैं । किन्ही ने 'गायत्री'''''''उत्कृति' तक एकैस ही छन्द माना है") ॥ १-चरुः (पु), 'अग्निमें हवन किये जानेवाले अन्न' का १ नाम है ॥ २-आमिक्षा (+ आमिक्षा पु० । स्त्री), 'औंटे हुए गर्म दूधमें दही छोड़ने पर उत्पन्न विकार-विशेष,छाँछ' का १ नाम है ॥ ३-धुवित्रम् (+धवित्रम् । न),'यज्ञमें आग सुलगाने वास्ते मृगचर्मके बने हुए पङ्खे' का १ नाम है ॥ ४-पृषदाज्यम् (+पृषातकम् । न), 'दही मिले हुए घी' का १ नाम है ॥ ५-परमान्नम् , पायसम् (२ न), 'खीर, हविष्य, दूधके जाउर' के २ नाम हैं ॥ ६-हव्यम् (न),'देवान्न' अर्थात् 'हवनके द्वारा देवताओंके उद्देश्यसे दिये जानेवाले अन्न-विशेष' का १ नाम है ॥ ७-कव्यम् (न),'पित्र्यन्न' अर्थात् 'ब्राह्मण-भोजनादिके द्वारा पितरोंके उद्देश्यसे दिये जानेवाले अन्न-विशेष' का १ नाम है ॥ ८-पात्रम् (न), 'स्रुवा आदि (चमस, प्रोक्षणी, प्रणीता, उलूखल, मुसल, ग्रह,......) बर्तन' का १ नाम है ॥ ९-ध्रुवा, उपभृत , जुहूः (३ स्त्री ), ये ३ 'स्रुवाके भेदहैं' ॥ १०-स्रुवः (पु), स्रुक् (=स्रुच् । + स्रुः । स्त्री),'स्रुवा' अर्थात् 'अग्निमें घी डालनेवाले यज्ञ-पात्र-विशेष' के २ नाम हैं ॥ ११-उपाकृतः (पु), 'वेदमन्त्रसे अभिमन्त्रित कर यज्ञमें मारे हुए पशु' का १ नाम है॥ १२-परम्पराकम् , शमनम् ( +शसनम् , ससनम्), प्रोक्षणम् (३ न), 'यज्ञमें पशुको मारने'के ३ नाम हैं ॥ १३-प्रमीतः, उपसंपन्नः, प्रोक्षितः (३ त्रि), 'यज्ञमें मारे

१ सान्नाय्यं हविः २ रग्नौ तु हुतं त्रिषु वषट्कृतम् ।
३ दीक्षान्तोऽवभृथो यज्ञे ४ तत्कर्मार्हं तु यज्ञियम् ॥ २७ ॥
त्रिष्वथ ५ क्रतुकर्मेष्टं ६ पूर्तं खातादि कर्म यत् ।
७ अमृतं ८ विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥
९ त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥
प्रादेशनं निर्वपणमपवर्जनमंहतिः ।
१० मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदेहिकम् ॥ ३० ॥
११ पितृदानं निवापः स्यात् १२ श्राद्धं तत्कर्म शास्त्रतः ।

---

हुए पशु' के ३ नाम हैं ॥ १–सान्नाय्यम्, हविः (=हविष्, भा० दी० । २न), 'हवन करने योग्य हविष्य आदि पदार्थ' के २ नाम हैं ॥ २–हुतम् (भा० दी०) वषट्कृतम् (२ त्रि), 'अग्निमें हवन किये हुए हविष्य आदि पदार्थ' के २ नाम हैं ॥ ३–अवभृथः (पु), 'यज्ञके अन्तमें किये जानेवाले समाप्ति-सूचकस्नान-विशेष' का १ नाम है ॥ ४–यज्ञियम् (त्रि), 'यज्ञके योग्य पदार्थ' का १ नाम है। ("जैसे, ब्राह्मण, हविष्यादि अन्न, स्थान,……")॥ ५–इष्टम् (न), 'यज्ञ कार्य, दान देने' का १ नाम है ॥ ६–पूर्तम् (न), 'बावली कुआँ तालाब आदि खुदवाने तथा औषधालय, देवालय आदि बनवाने' का १ नाम है ॥ ७–अमृतम् (न), 'यज्ञसे बचे हुए हविष्य' का १ नाम है ॥ ८–विघसः (पु),'ब्राह्मण अतिथि आदिके भोजनके बाद बचे हुए अन्न' का १ नाम है ॥ ९–त्यागः (पु), विहापितम्, दानम्, उत्सर्जनम् (+उत्सर्गः पु), विसर्जनम्, विश्राणनम्, वितरणम्, स्पर्शनम्, प्रतिपादनम्, प्रादेशनम्, निर्वपणम्, अपवर्जनम् (११ न), अंहतिः (स्त्री), 'दान देने' के १३ नाम हैं ॥ १०–और्ध्वदेहिकम् (+और्ध्वदैहिकम्। न) 'मरे हुएके उद्देश्यसे मरने के दिनसे एकादशाह तक दिये हुए पिण्ड-दान आदि' का १ नाम है ॥११–पितृदानम् (न), निवापः (पु), सपिण्डीकरणके बाद पितरोंके उद्देश्यसे दिये हुए पिण्ड-दान' का १ नाम है ॥ १२–श्राद्धम् (न), 'श्राद्ध' अर्थात 'पितरोंके उद्देश्यसे शास्त्रानुसार किये जानेवाले पिण्डदान आदि कार्य' का १

१ अन्वाहार्यं मासिकेंऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥ ३१ ॥
३ पर्येषणा परिष्टिश्च ४अन्वेषणा च गवेषणा ।
५ सनिस्त्वध्येषणा ६ याच्ञाऽभिशस्तिर्याचनाऽर्थना ॥ ३२ ॥
७ षट् तु त्रिष्वर्घ्यमर्घार्थे ९पाद्यं पादाय वारिणि ।
१० क्रमादातिथ्या ११तिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥
१२ स्युरावेशिक आगन्तुरतिथिर्ना गृहागते ।
१३ 'प्राघूर्णिकः प्राघुणकश्च १४अभ्युत्थानं तु गौरवम्' ( ५ )
१५ पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः ॥ ३४ ॥

---

नाम है ॥ १-अन्वाहार्यम् (न), मासिकः ( पु, भा०दी० ), 'अमावस्याको किये जानेवाले मासिक श्राद्ध' के २ नाम हैं ॥ २-कुतपः (+कुतुपः । पु न), 'दिनका आठवां हिस्सा, एक मुहूर्त्त या दो घटी' का १ नाम है ॥ ३-पर्येषणा, परीष्टिः (२ स्त्री), महे० मतसे 'श्राद्धमें ब्राह्मणोंकी सेवा करने' के २ नाम हैं ॥ ४-अन्वेषणा, गवेषणा (२ स्त्री), महे० मतसे 'श्राद्धमें ब्राह्मणों· को ढूंढने' के २ नाम है । ("भा० दी० मतसे 'पर्येषणा,..........' ४ नाम 'धर्मादिके खोज़ करने' के हैं") ॥ ५-सनिः, अध्येषणा (२स्त्री), भा०दी० मत से 'गुरु पिता माता आदि श्रेष्ठ जनोंकी सेवा करने और प्रार्थनापूर्वक गुरु आदि श्रेष्ठ जनोंकी किसी काममें प्रवृत्त करने' के २ नाम हैं । ६-याच्ञा, अभिशस्तिः (+अभिषस्तिः), याचना, अर्थना (४ स्त्री), 'याचना करने, माँगने के ४ नाम हैं ॥ ७-यहां से ६ शब्द त्रिलिङ्ग हैं ॥ ८-अर्घ्यम् (त्रि), अर्घ (अर्घ्य देने) के लिये जल' का १ नाम है ॥ ९-पाद्यम् (त्रि), 'पाद्य (पैर धोने)के लिये जल' का १ नाम है ॥ १०-आतिथ्यम् (त्रि), 'अतिथियोंके नि· मित्त वस्तु' का १ नाम है ॥ ११-अतिथेयम् (त्रि), 'अतिथियोंके विषयमें सज्जन (अच्छा व्यवहार करनेवाले)' का १ नाम है ॥ १२-आवेशिकाः, आगन्तुः (२ त्रि), अतिथिः (+आतिथिः पु; अतिथी स्त्री), 'अतिथि' के ३ नाम हैं ॥ १३-[प्राघूर्णिकः, प्राघुणकः(+अवेशिकः । २ पु),'अभ्यागत'के२ नाम है ] ।। १४-[अभ्युत्थानम् , गौरवम् (२ न), 'अभ्युत्थान' अर्थात् 'बड़े लोगों के आने पर ऊठकर अगवानी करने' के २ नाम हैं] ।। १५-पूजा,नमस्या,अपचितिः,सपर्या,

१ वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना ।
२ व्रज्याटाट्या पर्यटनं ३ चर्या त्वीर्यापथे स्थितिः ॥ ३५ ॥
४ उपस्पर्शस्त्वाचमनम् ५ अथ मौनमभाषणम् ।
६ 'प्राचेतसश्चादिकविः स्यान्मैत्रावरुणिश्च सः ( ६ )
वाल्मीकश्चा७थ गाधेयो विश्वामित्रश्च कौशिकः ( ७ )
८ व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः' ( ८ )
९ आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः ॥ ३६ ॥
पर्यायश्चा१०तिपातस्तु स्यात्पर्यय उपात्ययः ।
११ नियमो व्रतमस्त्री १२तच्चोपवासादि पुण्यकम् ॥ ३७ ॥
१३ औपवस्तं तूपवासो १४विवेकः पृथगात्मता ।

---

अर्चा, अर्हणा (६ स्त्री), 'पूजा' के ६ नाम हैं । १–वरिवस्या, शुश्रूषा परिचर्या ( +उपचर्या, परेष्टिः ) उपासना ( +न ४ स्त्री ), 'शुश्रूषा करने' के ४ नाम हैं ।। २–व्रजा, अटाट्या (+अटा, अट्या, मेहे० । २ स्त्री), पर्यटनम् (+भ्रमणम् । न), भा० दी० मतसे 'घूमने' के ३ नाम हैं ।। ३–चर्या ( +ईर्या मुनि० । स्त्री ), 'ध्यान,मौन इत्यादि योगमार्गोंमें स्थित होने' का १ नाम है ।। ४–उपस्पर्शः(पु), आचमनम् (न), 'आचमन करने' के २ नाम हैं ।। ५–मौनम्, अभाषणम् (२ न),'मौन या चुप रहने' के २ नाम हैं ।। ६–[प्राचेतसः, आदिकविः, मैत्रावरुणिः (+मैत्रावरुणः), वाल्मीकः (+वाल्मीकिः, वल्मीकः, वल्मिकः । ४ पु), 'वाल्मीकि मुनि' के ४ नाम हैं] ।। ७–[गाधेयः, विश्वामित्रः, कौशिकः (+कौषिकः। ३ पु), 'विश्वामित्र मुनि' के ३ नाम हैं] ।। ८–[व्यासः, द्वैपायनः, पाराशर्यः, सत्यवतीसुतः (४ पु),'व्यास मुनि' के ४ नाम हैं] ॥ ९–आनुपूर्वी (स्त्री । +आनुपूर्व्यम्), आवृत, परिपाटी (+परिपाटिः । २ स्त्री), अनुक्रमः,पर्यायः (२पु),'क्रम' अर्थात 'सिलसिलेवार' के ९ नाम हैं ॥ १०–अतिपातः,पर्ययः, उपात्ययः (३ पु), 'विना क्रम' अर्थात् 'बेसिलसिलेवार' के ३ नाम हैं ॥ ११–नियमः (पु), व्रतम् (न पु), 'नियम या व्रत' के २ नाम हैं॥ १२–पुण्यकम् (न),'उपवासादि (सान्तपन, कृच्छ्र, अतिकृच्छ्र, प्राजापत्य, चान्द्रायण आदि) 'शास्त्र–विहित व्रत' का १ नाम है ॥१३–औपवस्तम् (+औपवस्त्रम्, उपवस्तम् । न), उपवासः (+उपोषितम् , उपोषणम् । पु), 'उपवास, उपास'के २ नाम हैं॥ १४–विवेकः(पु), पृथगात्मता (भा० दी०,स्त्री

१ स्याद्ब्रह्मवर्चसं वृत्ताध्ययनर्धिरथाञ्जलिः ॥ ३८ ॥
पाठे ब्रह्माञ्जलिः ३ पाठे विप्रुषो ब्रह्मबिन्दवः ।
४ ध्यानयोगासने ब्रह्मासनं ५ कल्पे विधिक्रमौ ॥ ३९ ॥
६ मुख्यः स्यात्प्रथमः कल्पो ७ऽनुकल्पस्तु ततोऽधमः ।
८ संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ॥ ४० ॥
९ समे तु पादग्रहणमभिवादनमित्युभे ।
१० भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥ ४१ ॥
११ तपस्वी तापसः पारिकाङ्क्षी १२ वाचंयमो मुनिः ।
१३ तपःक्लेशसहो दान्तो १४ वर्णिनो ब्रह्मचारिणः ॥ ४२ ॥

---

'प्रकृति और पुरुषके भेद-ज्ञान वा भावोंके पृथक् स्वरूप ज्ञान' के २ नाम हैं ॥१-ब्रह्मवर्चसम् (न), वृत्ताध्ययनर्द्धिः (भा० दी०, स्त्री),'ब्रह्मवर्चस' अर्थात् 'सदाचार और वेदाभ्यासकी वृद्धि या सम्पत्ति' के २ नाम हैं ॥ २-ब्रह्माञ्जलिः(पु), 'वेदादि पढ़नेके पहले और अन्त समयमें व्यस्त हाथसे (दहने हाथसे दहिना और बायें हाथसे बायां) गुरुके पैर को छूकर प्रणाम करने' का १ नाम है ॥ ३-ब्रह्मबिन्दुः (पु), 'वेदादि पढ़नेके समय मुखसे निकले हुए जल-कण (थूकमिश्रित जलकी छोटी २ बूँद)' का १ नाम है॥ ४-ब्रह्मासनम् (न), 'ध्यान और योगके आसन' का १ नाम है ।। ५-कल्पः, विधिः,क्रमः (३ पु), 'शास्त्रोक्त विधि' के ३ नाम हैं ।। ६-मुख्यः (पु), 'शास्त्रोक प्रधान विधि' का १ नाम है ।। ७-अनुकल्पः (पु), 'शास्त्रोक्त गौण ( अप्रधान, अभाव-पक्षीय) विधि' का १ नाम है ।। ८-उपाकरणम् (न), 'संस्कारके साथ २ वेदादिको ग्रहण करने' का १ नाम है ।। ९-पादग्रहणम् , अभिवादनम् (२ न), 'अपने नामको कहते हुए प्रणाम करने' के २ नाम हैं।। १०-भिक्षुः, परिव्राट् (=परिव्राज् । +परिव्राजकः) ,कर्मन्दी (=कर्मन्दिन्) पाराशरी (=पाराशरिन्), मस्करी (=मस्करिन् । ५ पु), 'सन्यासी' के ५ नाम हैं ॥ ११-तपस्वी (=तपस्विन् ), तापसः, पारिकाङ्क्षी ( =पारिकाङ्क्षिन् । ३ पु), 'तपस्वी' के ३ नाम हैं ॥१२-वाचंयमः, मुनिः (२ पु), 'मुनी' के २नाम हैं । ("किसी २ के मतसे ये २ नाम भी 'संन्यासी' के ही पर्याय हैं) ॥ १३-तपःक्लेशसहः (भा० दी०), दान्तः (२पु ), 'तपस्याके क्लेशको सहनेवाले' के २ नाम हैं ॥१४-वर्णी (=वर्णिन्), ब्रह्मचारी (=ब्रह्मचारिन्),'ब्रह्म-

१ ऋषयः सत्यवचसः २ स्नातकस्त्वाप्लुतो व्रती।
३ ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते॥ ४३॥
४ यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ।
स्थाण्डिलश्चा५थ विरजस्तमसः स्युर्द्वयातिगाः॥ ४४॥
६ पवित्रः प्रयतः पूतः ७ पाखण्डाः सर्वलिङ्गिनः।
८ पालाशो दण्ड आषाढो व्रते ९ राम्भस्तु वैणवः॥ ४५॥
१० अस्त्री कमण्डलुः कुण्डी ११ व्रतिनामासनं वृषी।

---

चारी' के २ नाम हैं॥१-ऋषि, सत्यवचाः (=सत्यवचस्। २ पु), 'ऋषि-समान्य' के २ नाम हैं। (श्रुतर्षि, काण्डर्षि, परमर्षि, महर्षि, राजर्षि, ब्रह्मर्षि और देवर्षि ये सात 'ऋषियोंके भेद' हैं॥ २-स्नातकः (+आप्लवव्रती =आप्लवव्रतिन्, आप्लुतव्रती=आप्लुतव्रतिन्। पु), 'स्नातक' अर्थात् वेदव्रतको समाप्त होनेपर गुरुकी आज्ञासे समाप्ति—सूचक स्नान—विशेष (समावर्तन) किये हुए ब्रह्मचारी' के २ नाम हैं। (स्नातकके तीन भेद हैं-वेदको 'समाप्त कर और व्रतको विना समाप्त किए समावर्तन संस्कारवाला **विद्यास्नातक**, और व्रतको समाप्तकर एवं वेदको विना समाप्त किये समावर्तनसंस्कारवाला **व्रतस्नातक**, तथा वेद और विद्या दोनोंको समाप्तकर समावर्तन संस्कारवाला **विद्याव्रतस्नातक** है)॥ ३-निर्जितेन्द्रियग्रामः, यती (=यतिन्), यतिः (३ पु), 'जितेन्द्रिय' के ३ नाम हैं॥ ४-स्थण्डिलशायी (=स्थण्डिलशायिन्), स्थाण्डिलः (२ पु), 'स्थण्डिल (विना साफ सुथरा की हुई अकृत्रिम भूमि) पर सोनेवाले व्रती' के २ नाम हैं॥ ५-विरजस्तमाः (=विरजस्तमस्), द्वयातिगः (२ पु), 'सत्त्वगुणी' के २ नाम हैं॥ ६-पवित्रः, प्रयतः, पूतः (३ पु), 'पवित्र' के ३ नाम हैं॥ ७-पाखण्डः (+पाषण्डः), सर्वलिङ्गी (=सर्वलिङ्गिन्। २ पु), 'पाखण्डी' अर्थात् 'दुष्ट शास्त्रमें स्थित बौद्ध आदि क्षपणक (संन्यासी)' के २ नाम हैं। ८-आषाढः (आषाढकः, आपाढः। पु), 'ब्रह्मचर्यावस्थामें ब्राह्मणसे धारण किये हुए पलाशके दण्ड' का १ नाम है॥ ९-राम्भः (पु), ब्रह्मचर्यावस्थामें धारण किये हुए बाँसके दण्ड' का १ नाम है॥ १०-कमण्डलुः (पु न), कुण्डी (स्त्री), 'कमण्डलु' के २ नाम हैं॥ ११-वृषी (+बृसी। स्त्री), 'ब्रह्मचारी

१ अजिनं चर्म कृत्तिः स्त्री २ भैक्षं भिक्षाकदम्बकम् ॥ ४६ ॥
३ स्वाध्यायः स्याज्जपः ४ सुत्याभिषवः सवनं च सा ।
५ सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम् ॥ ४७ ॥
६ दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ।
७ शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥ ४८ ॥
८ नियमस्तु स तत्कर्म नित्यमागन्तुसाधनम् ।
९ 'क्षौरं तु भद्राकरणं मुण्डनं वपनं त्रिषु' ( ६ )
१० उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे ॥ ४९ ॥

---

आदि व्रतियोंके आसन' का १ नाम है ।। १-अजिनम्, चर्म (=चर्मन् । २ न), कृत्तिः (स्त्री), 'मृगादिके चमड़े' के ३ नाम हैं ।। २-भैक्षम् (त्रि), 'भिक्षामें मिले हुए पदार्थ' का १ नाम है ।। ३-स्वाध्यायः, जपः (२ पु), 'नियमसे वेदादिके अभ्यास करने'के २ नाम हैं ।"जप तीनप्रकारका होता है—वाचिक, उपांशु और मानस । इनमें उत्तरोत्तर श्रेष्ठ कहा गया है" ।। ४-सुत्या (स्त्री), अभिषवः (पु), सवनम् (न), 'सोमलता (यज्ञौषधि) को कूटने' के ३ नाम हैं ।। ५-अघमर्षणम् (त्रि), 'सब पापोंको नाश करनेवाले जप (ऋचा आदि)' का १ नाम है ।। ६-दर्शः, पौर्णमासः (२ पु), 'अमावास्या और पूर्णिमाको होने वाले यज्ञ' का क्रमशः एक एक नाम है ।। ७-यमः (पु), 'जीवनभर शरीरसे करने योग्य संयम' का १ नाम है । ("अहिंसा, सत्य, अस्तेय ( किसीकी कोई चीज विना दिये या पूछे न लेना ), ब्रह्मचर्य (आठ प्रकारके मैथुनका त्याग) और अपरिग्रह ( हिंसादि अनेक दोषों को देख कर दान नहीं लेना, ये पांच यम हैं") ।। ८-नियमः (पु), 'नियम' अर्थात् 'जो काम जीवन पर्यन्त नहीं हो सके किन्तु खास खास समय पर किया जाय उस काम' का १ नाम है । ("शौच अर्थात् मिट्टी जल आदिसे बाहरी और पञ्चगव्य-पान आदिसे भीतरी पवित्रता, सन्तोष, तप (चन्द्रायण, कृच्छ्र, सान्तपन आदिव्रत), स्वाध्याय (वेदादिका अध्ययन), ईश्वरप्रणिधान (परमेश्वरकी पूजा आदि, ये पांच नियम हैं") ।। ९-[क्षौरम्, भद्राकरणम्, मुण्डनम् (३ न) वपनम् (त्रि), 'मुण्डन कराने' के ४ नाम हैं] ।। १०-उपवीतम्,

१ प्राचीनावीतमन्यस्मिन् २ निवीतं कण्ठलम्बितम् ।
३ अङ्गुल्यग्रे तीर्थं दैवं ४ स्वल्पाङ्गुल्योर्मूले कायम् ॥ ५० ॥
५ मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं ६ मूले त्वङ्गुष्ठस्य ब्राह्मम् ।
७ स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ॥ ५१ ॥
८ देवभूयादिकं तद्वत् ९ कृच्छ्रं सांतपनादिकम् ।
१० संन्यासवत्यनशने पुमान्प्रायोऽ११थ वीरहा ॥ ५२ ॥
नष्टाग्निः १२ कुहना लोभान्मिथ्येर्यापथकल्पना ।

---

यज्ञसूत्रम् ( भा० दी० । २ न ) 'बायें कन्धेके ऊपरसे दहने तरफ नीचेकी ओर लटकते हुए जनेऊ' के २ नाम हैं । ("उपवीत जनेऊको धारण करनेवालेका उपवीती (=उपवीतिन् पु ), यह १ नाम है") ॥ १–प्राचीनावीतम् (न), 'दहने कन्धेके ऊपरसे बायें तरफ नीचेको लटकते हुए जनेऊ' का १ नाम है । ("प्राचीनावीत जनेऊको धारण कनेवालेका प्राचीनावीती (=प्राचीनावीतिन् पु) यह १ नाम है") ।। २–निवीतम् (न) 'मालाकी तरह गर्दनसे सीधे नीचेकी तरफ लटकते हुए जनेऊ' का १ नाम है । ("नीवीत जनेऊको धारण करनेवाले का निवीती (=निवीतिन् पु) यह १नाम है")।। ३–दैवम् (न) 'देवतीर्थ' अर्थात् 'हाथकी अङ्गुलियोंके आगेवाले भाग'का १ नाम है ।। ४–कायम् (न), 'कायतीर्थ' अर्थात् 'हाथकी कनिष्ठा अङ्गुलीके नीचेवाले भाग' का १ नाम है ।। ५–पित्र्यम् ( +पैत्र्यम् , पैत्रम् । न), 'पितृतीर्थ' अर्थात् 'हाथके अंगूठे और तर्जनी अङ्गुलीके बीचवाले भाग' का १ नाम है । ६–ब्राह्मम् (न), 'ब्रह्मतीर्थ' अर्थात् 'हाथके अँगूठेके मूलभाग' का १ नाम है ।। ७–ब्रह्मभूयम् , ब्रह्मत्वम् ब्रह्मसायुज्यम्(३ न), 'मोक्ष' अर्थात 'ब्रह्ममें मिल जाने' के ३ नाम है ।। ८–देवभूयम् (न), आदि (देवत्वम् , देवसायुज्यम् , २ न) 'देवतामें मिल जाने' के नाम हैं ।। ९–कृच्छ्रम् (न) 'सान्तपन आदि (चान्द्रायण, पराक और प्राजापत्य, आदि) व्रत' का १ नाम है ।। १०–प्रायः (पु), संन्यास-पूर्वक 'भोजनको छोड़ने'का १ नाम है ।। ११–वीरहा (=वीरहन्। +विरहा=विरहन्), नष्टाग्निः (२ पु), 'प्रमादसे जिस अग्निहोत्रीकी आग बुझ गई हो उस अग्निहोत्री' के २ नाम हैं ।। १२–कुहना (स्त्री),'दम्भसे ध्यान मौनादि धारण करने, धनलोभसे मिथ्या धर्माचरण करने' का १

१ व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः ॥ ५३ ॥
३ धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ।
५ सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥ ५४ ॥
अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ।
६ परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥ ५५ ॥
७ परिवित्तिस्तु तज्ज्यायान् ८ विवाहोपयमौ समौ ।
तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥ ५६ ॥
९ व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ।
१० त्रिवर्गो धर्मकामार्थैः ११ चतुर्वर्गः समोक्षकैः ॥ ५७ ॥

---

नाम है ॥ १-व्रात्यः, संस्कारहीनः (भा० दी० । २ पु), 'यथोचित समय पर संस्कारसे हीन द्विजाति (ब्राह्मण, क्षत्रिय और वैश्य)' के २ नाम हैं ॥ २-अस्वाध्यायः (भा० दी०), निराकृतिः (२ पु), 'वेदको नहीं पढ़नेवाले' के २ नाम हैं । ( व्रात्यः,.......' ४ नाम एकार्थक हैं, यह भी एक आचार्योंका मत है") ॥ ३-धर्मध्वजी (= धर्मध्वजिन्), लिङ्गवृत्तिः (२ पु),'भिक्षा आदि मिलनेके लिये जटा भस्मादि धारण कर झूठा साधु बनने' के २ नाम हैं ॥ ४-अवकीर्णी (= अवकीर्णिन्), क्षतव्रतः (भा० दी० । २ पु), 'नियमसे चलने वाला ब्रह्मचर्यादि व्रत जिसका बीच ही में भग्न हो गया हो उस ब्रह्मचारी आदि व्रती' के २ नाम हैं ॥ ५-अभिनिर्मुक्तः, अभ्युदितः (२पु),'जिसके सोये रहनेपर सूर्योदय हो और जिसके सोने पर सूर्यास्त हो उसका' क्रमशः एक एक नाम है ॥ ६-परिवेत्ता (=परिवेत्तृ पु), 'बड़े भाईके अविवाहित (विना व्याह किये हुए) रहनेपर विवाहित(व्याह किये हुए) छोटे भाई' का १ नाम है ॥ ७-परिवित्तिः ( पु), जिसका छोटा भाई विवाहित हो उस अविवाहित बड़े भाई' का १ नाम है ।। ८-विवाहः, उपयमः, परिणयः, उद्वाहः, उपयामः (५ पु), पाणिपीडनम् ( + पाणिग्रहणम् , करपीडनम् .......' । न), 'विवाह, शादी' ६ नाम हैं ॥ ९-व्यवायः, ग्राम्यधर्मः (२ पु), मैथुनम् , निधुवनम् , रतम् (३ न) 'मैथुन' अर्थात् 'स्त्रीके साथ सांसारिक सुख करने'के ५नाम हैं॥ १०-त्रिवर्गः (पु), 'अर्थ, धर्म और कामके समुदाय' का १ नाम है ।। ११-चतुर्वर्गः (पु), 'अर्थ, धर्म, काम और मोक्षके समुदाय'

१ सबलैस्तैश्चतुर्भद्रं २ जन्याः स्निग्धा वरस्य ये

इति ब्रह्मवर्गः ॥ ७ ॥



## ८. अथ क्षत्रियवर्गः ।

३ मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट् ।
४ राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः ॥ १ ॥
५ राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ।
६ चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः ॥ २ ॥
८ येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।

---

का एक नाम है ॥१–चतुर्भद्रम् ( न), 'सुदृढ अर्थ, धर्म, काम और मोक्षके समुदाय'का १ नाम है॥ २–जन्याः (पु),'समान अवस्थावाले वर (दुलहा) के प्रेमी या वधूकी पालकी ढोनेवाले' का १ नाम है ।।इति ब्रह्मवर्गः ।।७।।



३–मूर्द्धाभिषिक्तः (+ मूर्द्धावषिक्तः), राजन्यः, बाहुजः, क्षत्रियः, विराट् (=विराज् । ५ पु), 'क्षत्रिय' के ५ नाम हैं ॥ ४–राजा (= राजन् ), राट् (=राज् ), पार्थिवः, क्ष्माभृत् (+ क्ष्माभुक् =क्ष्माभुज् , महीभुक् =महीभु-ज्,......,), नृपः, भूपः (+महीपः, भूपतिः , भूपालः, महीपतिः,महीपालः, .........), महीक्षित् (+ अधिपः, नराधिपः, नरेशः, ......। ७ पु), 'राजा' के ७ नाम हैं॥ ५–अधीश्वरः (+ अप्रतिरथः। पु), 'सब तरफके राजाओंको वशमें करनेवाले राजा'का १ नाम है ॥ ६–चक्रवर्ती (=चक्रवर्तिन् ), सार्व-भौमः (२ पु), 'चक्रवर्ती राजा' अर्थात् 'समुद्र पर्यन्त पृथ्वीकी रक्षा करनेवाले राजा' के २ नाम हैं । (" भरत, सगर, मघवा, सनत्कुमार, शान्ति, कुन्थु, अर (ये तीनो जिन थे), कार्तवीर्य, पद्म, हरिषेण, जय और ब्रह्मदत्त ये बारह राजा भारतवर्षमें चक्रवर्ती हुए हैं, ये सब इक्ष्वाकु वंशमें उत्पन्न थे") ॥ ७–मण्डलेश्वरः (पु), मण्डल (इसके बारह, प्रकृति अर्थात् भेद होते हैं) या देशको शासन करनेवाले राजा' का १ नाम है ।। ८–सम्राट् (=सम्राज् पु), भा० दी० मतसे 'जिसने राजसूय यज्ञ किया हो मण्डल (इसके बारह प्रकृति होते हैं) का स्वामी हो और सब राजाओंको जीतकर

शास्ति यश्चाज्ञया राज्ञः स सम्राड१थ राजकम् ॥ ३ ॥
२ राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ।
३ मन्त्री धीसचिवोऽमात्यो४ऽन्ये कर्मसचिवास्ततः ॥ ४ ॥
५ महामात्राः प्रधानानि ६ पुरोधास्तु पुरोहितः ।
७ द्रष्टरि व्यवहाराणां प्राड्विपाकाक्षदर्शको ॥ ५ ॥
८ प्रतीहारो द्वारपालद्वास्थद्वास्थितदर्शकाः ।
९ रक्षिवर्गस्त्वनीकस्थो१०ऽथाध्यक्षाधिकृतौ समौ ॥ ६ ॥
११ स्थायुकोऽधिकृतो ग्रामे १२ गोपो ग्रामेषु भूरिषु ।
१३ भौरिकः कनकाध्यक्षो १४ रूप्याध्यक्षस्तु नैष्किकः ॥ ७ ॥

---

अपने वशमें करलिया हो उस राजा' का और किसी २ के मतसे 'पूर्वोक्त १·१ गुणसे भी युक्त राजा' का १ नाम है।। १-राजकम् (न), 'राजसमूह' का १ नाम है ।। २-राजन्यकम् (न), 'क्षत्रियोंके समुदाय' का १ नाम है।। ३-मन्त्री (=मन्त्रिन् ), धीसचिवः, अमात्यः (+सामवायिकः । ३ पु), 'मन्त्री' अर्थात् 'बुद्धिविषयक सहायता देनेवाले मन्त्री' के ३ नाम हैं ।। ४-कर्मसचिवः (पु), 'प्रत्येक काममें सहायता देनेवाले मन्त्री' का १ नाम है।। ५-महामात्रः(पु) प्रधानम् (न ।+पु), 'प्रधान मन्त्री, राजाके खास सलाहकार' के २ नाम हैं। ("किसी २ के मतसे, कर्मसचिवः' आदि ३ नाम 'काममें सहायता देनेवाले मन्त्री' के ही हैं") । ६-पुरोधाः (=पुरोधस्), पुरोहितः (+सौवस्तिकः । २ पु),'पुरोहित' के २ नाम हैं ।। ७-प्राड्विपाकः, अक्षदर्शकः (+आक्षदर्शकः, अक्षपटलिकः । २ पु), 'व्यवहारको देखनेवाले, के २ नाम हैं । ("व्यवहारके प्रधान अट्ठारह भेद होते हैं") ८-प्रतीहारः (+ प्रतिहारः), द्वारपालः, द्वास्थः (+ द्वाःस्थः), द्वास्थितः (+द्वाःस्थितः), दर्शकः (+द्वास्थितदर्शकः, द्वास्थोपस्थितदर्शकः, दौवारिकः । ९ पु), 'द्वारपाल, ड्योढ़ीदार' के ९ नाम हैं ॥ ९-रक्षिवर्गः, अनीकस्थः (२ पु), 'राजा आदि के अङ्गरक्षक' के २नाम हैं ॥ १०-अध्यक्षः, अधिकृतः (२ पु),'अध्यक्ष' के २ नाम हैं ।। ११-स्थायुकः (पु), 'एक ग्रामके अध्यक्ष' का १ नाम हैं ।। १२-गोपः (पु), 'बहुत ग्रामोंके अध्यक्ष' का १नाम है ।। १३-भौरिकः (+हैरिकः), कनकाध्यक्षः (२ पु),'सुवर्णोके अध्यक्ष' के २ नाम हैं ॥ १४-रूप्याध्यक्षः, नैष्किकः (२ पु), 'टकसाल'

१ अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः ।
२ सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ॥ ८ ॥
३ शण्ढो वर्षवरस्तुल्यौ—४ सेवकार्थ्यनुजीविनः ।
५ विषयानन्तरो राजा शत्रु ६ मित्रमतः परम् ॥ ९ ॥
७ उदासीनः परतरः ८ पार्ष्णिग्राहस्तु पृष्ठतः ।
९ रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥
द्विड्विपक्षाहितामित्रदस्युशात्रवशात्रवः ।
अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥
१० वयस्यः स्निग्धः सवया ११ अथ मित्रं सखा सुहृत् ।

---

(रुपया आदि सिक्का ढालने के कारखाने) के अध्यक्ष' के २ नाम हैं ॥ १–अन्तर्वंशिकः (+अन्तर्वंशिकः । पु), "रनिवासमें नियुक्त पुरुष' का १ नाम है ॥ २–सौविदल्लः, कञ्चुकी (=कञ्चुकिन्), स्थापत्यः, सौविदः । (४ पु) 'कञ्चुकी' अर्थात् 'राजाओंके पासमें या रनिवासमें बाहरी रक्षा के लिये बेंत की पतली छड़ी लिये हुए आने जानेवाले वृद्ध पुरुष' के ४ नाम हैं ॥३–शण्ढः (+षण्ढः), वर्षवरः (२ पु), 'नपुंसक, जनखा' के २ नाम हैं।। ४–सेवकः,अर्थी(=अर्थिन्), अनुजीवी( =अनुजीविन् । +अनु चरः । ३ पु), 'सेवक नौकर' के ३ नाम हैं ॥ ५–शत्रुः (पु), 'अपने देश (राज्य) के समीपवाले देशके राजा'का १ नाम है ॥ ६–मित्रम् (न), 'पूर्वोक्तसे भिन्न राजा' का १ नाम है॥७–उदासीनः (पु), 'उदासीन'अर्थात् 'पूर्वोक्त शत्रु और मित्रके लक्षणसे भिन्न राजा' का १ नाम है ॥ ८–पार्ष्णिग्राहः (पु), 'राजाके युद्धादि–यात्रामें पीछेसे किलेपर चढ़ाई करनेवाले या योद्धाके पीछेसे रक्षा करनेवाले राजा' का १ नाम है ॥ ९–रिपुः, वैरिः, सपत्नः, अरिः, द्विषन् (=द्विषत् ), द्वेषणः, दुर्हृदः, द्विट् (=द्विष् ) ,विपक्षः, अहितः, अमित्रः, दस्युः, शात्रवः, शत्रुः, अभिघाती (=अभिघातिन् । + अभियातिः ), परः, अरातिः, प्रत्यर्थी (=प्रत्यर्थिन् ), परिपन्थी (=परिपन्थिन् । १९ पु), 'वैरी' के १९ नाम हैं ॥ १०–वयस्यः, स्निग्धः, सवयाः (=सवयस् । ३ पु),'समान अवस्था वाले मित्र' के ३ नाम हैं ॥ ११–मित्रम् (न), सखा (=सखि),सुहृत् (=सुहृद् । +साप्तपदीनः। २ पु), 'मित्र,

१ सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥ १२ ॥
३ यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ।
चारश्च गूढपुरुषश्चाप्तप्रत्ययितौ समौ ॥ १३ ॥
५ सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।
स्युर्मौहूर्त्तिकमौहूर्त्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥
६ तान्त्रिको ज्ञातसिद्धान्तः ७ सत्त्री गृहपतिः समौ ।
८ लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥
९ लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ ।
१० स्यात्सन्देशहरो दूतो ११ दूत्यं तद्भावकर्मणी ॥ १६ ॥
१२ अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।

---

दोस्त' के ३ नाम है॥ १-सख्यम , साप्तपदीनम् ( + सौहृदम् ,सौहार्दम् ,सौहृदी-यम् , अजर्यम् , मैत्री। २न), 'दोस्ती मित्रता' के २ नाम हैं ॥ २-अनुरोधः (पु), अनुवर्तनम् (न), 'अनुकूल रहने' के २ नाम हैं ॥ ३-यथार्हवर्णः, प्रणि-धिः, अपसर्पः ( + अवसर्पः), चरः, स्पशः,चारः, गूढपुरुषः (७ पु), 'गुप्तचर खो-फिया' के ७ नाम हैं ॥ ४-आप्तः, प्रत्ययितः (२ त्रि),'विश्वासपात्र पुरुषा-दि' के २ नाम हैं। ५-सांवत्सरः, ज्यौतिषिकः( + ज्योतिषिकः), दैवज्ञः, गणकः, मौहूर्त्तिकः, मौहूर्त्तः, ज्ञानी (=ज्ञानिन्), कार्तान्तिकः (८ पु), 'ज्यौतिषी' के ८ नाम हैं ॥ ६-तान्त्रिकः, ज्ञातसिद्धान्तः (२ पु), 'सिद्धान्तको ठीक २ जानने वाले' के २ नाम हैं ॥७-सत्त्री (=सत्त्रिन्), गृहपतिः (२पु), अन्नादिको सर्वदा दान करनेवाले गृहस्थ' के २ नाम हैं ॥ ८-लिपिकारः ( + लिपिकरः, लिबि करः, लिपिङ्करः, लिबिङ्करः ), अक्षरचणः, अक्षरचुञ्चुः, लेखकः (४ पु ), 'लेखक, कातिब' के ४ नाम हैं ॥ ९-लिपिः( + लिपी), लिबिः (२ स्त्री), लिखे हुये अक्षर 'चित्रादि' के २ नाम हैं। ("महे० के मतसे 'लिखितम् , अक्षरसंस्थानम्) ( + लिखिताक्षरसंस्थानम् , अक्षरविन्यासः । २ न), इन शब्दोंके भी पर्याय हो-नेसे ४ नाम उक्तार्थक हैं") ॥ १०-सन्देशहरः, दूतः (२ पु), 'दूत,सन्देश पहुं-चानेवाले' के २ नाम हैं ॥ ११-दूत्यम् ( + दौत्यम् । न), 'दूतके काम या भाव' का १ नाम है ॥ १२-अध्वनीनः, अध्वगः, अध्वन्यः, पान्थः, पथिकः

१ स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥
राज्याङ्गानि प्रकृतयः २ पौराणां श्रेणयोऽपि च ।
३ सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ॥ १८ ॥
४ षड् गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ।
५ क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ १९ ॥

---

(९ पु), 'पथिक, राही, मुसाफिर' के ९ नाम हैं ॥ १-स्वामी (=स्वामिन्) अमात्यः, सुहृत् (=सुहृद्), कोशः (+कोषः । ४ पु), राष्ट्रम्, दुर्गम्, बलम् (३ न), 'राजा, मन्त्री, मित्र, खजाना, राज्य, किला और सेना' का वाचक क्रमशः १-१ शब्द है, इन सातोंके 'राज्याङ्गम् (न), प्रकृतिः (स्त्री)' ये २ नाम हैं अर्थात् राजा आदि,...७ 'राज्याङ्ग और प्रकृतिः कहलाते हैं ॥ २-पौराणां श्रेणयः (स्त्री), अर्थात् 'नगरवासियोंको भी 'राज्याङ्ग और प्रकृति' कहते हैं; इस तरह 'राज्याङ्ग या प्रकृति' के ८ भेद हैं ॥ ३-सन्धिः, विग्रहः, यानम्, आसनम्, द्वैधम् (३ न), आश्रयः (शेष ३ पु), ये ६ 'नीति जाननेवालोंके गुण' हैं । ("प्रसङ्गवश इनके लक्षण कहते हैं—सुवर्णादि धन हाथी घोड़ा आदि देकर वैरीसे मेल करनेको सन्धि १, शत्रुके राज्यादिको लूटने या अग्नि आदि लगाकर वैर या युद्ध करने को विग्रह २, जीतनेकी इच्छासे चढ़ाई या युद्धयात्रा करनेको यान ३, अपने पक्षके दुर्बल होनेसे किला आदिको पुष्ट तथा सुरक्षित कर चुप चाप बैठ जानेको आसन ४, बलवान्के साथ मित्रता और दुर्बल के साथ वैर करने को या आधी सेनाके साथ चढ़ाई करनेको द्वैध ५, तथा शत्रुसे पीड़ित होकर अपनी रक्षाके लिये उदासीन या मध्यम राजाके शरणमें जानेको आश्रय ६, कहते हैं; इनके भी अनेक भेद होते हैं") ॥ ४-शक्तिः (स्त्री), 'शक्ति' अर्थात् 'सामर्थ्य' 'प्रभाव, उत्साह और मन्त्र (गुप्त सलाह)' से होती है अर्थात् 'प्रभावज, उत्साहज और मन्त्रज' ये ३ शक्तियां हैं । ("कोष और दण्ड-बल प्रभावज शक्ति १, विक्रम-बल उत्साहज शक्ति २, और सन्धि आदि षड्गुण तथा सामादि उपायका यथावत् प्रयोग मन्त्रज शक्ति ३ है") ॥ ५-क्षयः (पु), स्थानम् (न), वृद्धिः (स्त्री), क्रमशः कृषि आदि अष्टवर्गकी कमी होनेको क्षय, सामान्य रहने (कमी वेशी नहीं होने) को स्थान और बढ़ने को वृद्धि, कहते हैं । ये ही तीनों (क्षयः, स्थानम्, वृद्धिः), नीति जाननेवालोंका

१ स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम् ।
२ भेदो दण्डः साम दानमित्युपायचतुष्टयम् ॥ २० ॥
३ साहसं तु दमो दण्डः ४ साम सान्त्वमथो समौ ।
५ भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥
७ पञ्च त्रिष्व ८ षडक्षीणो यस्तृतीयाद्यगोचरः ।
९ विविक्तविजनच्छन्ननिःशलाकास्तथा रहः ॥ २२ ॥
रहश्चोपांशु चालिङ्गे १० रहस्यं तद्भवे त्रिषु ।
११ समौ विस्रम्भविश्वासौ १२ भ्रेषो भ्रंशो यथोचितात् ॥ २३ ॥
१३ अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् ।

---

त्रिवर्ग है; त्रिवर्गः ( पु ), है ॥ १–प्रभावः, प्रतापः (२ पु), 'प्रताप' अर्थात् 'खजाने तथा शासनसे उत्पन्न तेज' के २ नाम हैं ॥ २–भेदः, दण्डः (२ पु),साम (=सामन् ), दानम् (२ न), क्रमशः वैरीके मन्त्री आदिको गुप्तचर आदिके द्वारा फोड़ कर अपने पक्षमें लाकर शत्रु को वशमें करनेको भेद्, अपराधियोंके शासन करनेको दण्ड, मीठे वचन या अन्यान्य उपायोंसे क्रोध दूर करनेको साम और किसी वस्तुके देनेको दान कहते हैं। ये ही चारो ( भेदः, दण्डः, साम, दानम ), नीति जाननेवालों के उपाय हैं, उपायः (पु) है। ( "भेदके तीन, दण्डके दो या चार, सामके चार और दान के पांच भेद होते हैं" ) ॥ ३–साहसम् (न), दण्डः, दमः (२ पु), 'दण्ड' के ३ नाम हैं ॥ ४–साम (=सामन् ), सान्त्वम् (२ न), 'साम, सान्त करने' के २ नाम हैं ॥ ५–भेदः, उपजापः (२ पु), 'भेद' के २ नाम है । ६–उपधा ( स्त्री ), मन्त्री आदिके धर्म धन काम और भयादिको जाननेके लिये उनकी राजाद्वारा परीक्षा करने' का १ नाम है ॥ ७–यहांसे ९ शब्द त्रिलिङ्ग हैं ॥ ८–अषडक्षीणः, (त्रि), 'केवल दो आदमियोंके किये हुये गुप्त सलाह' का १ नाम है ॥ ९–विविक्तः, विजनः, छन्नः, निःशलाकः ( ४ त्रि ), रहः (=रहस् न), रहः (+रहस्), उपांशु (२ अव्य० ), 'एकान्त' के ७ नाम हैं ॥ १०–रहस्यम् (त्रि), 'रहस्य' छिपाने योग्य' का १नाम है ॥ ११–विस्रम्भः ( × विश्रम्भः), विश्वासः (२पु), 'विश्वास' के २ नाम हैं ॥ १२–भ्रेषः ( पु ), 'अनुचित' का १ नाम है ॥ १३–अभ्रेषः, न्यायः, कल्पः (३ पु), देशरूपम् , समञ्जसम् (२न) 'न्याय मुना-

१ युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २४ ॥
न्याय्यं च त्रिषु षट् २ संप्रधारणा तु समर्थनम् ।
३ अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २५ ॥
शिष्टिश्चाज्ञा च ४ संस्था तु मर्यादा धारणा स्थितिः ।
५ आगोऽपराधो मन्तुश्च ६ समे तूद्दानबन्धने ॥ २६ ॥
७ द्विपाद्यो द्विगुणो दण्डो ८ भागधेयः करो बलिः ।
९ घट्टादिदेयं शुल्कोऽस्त्री १० प्राभृतं तु प्रदेशनम् ॥ २७ ॥
११ उपायनमुपग्राह्यमुपहारस्तथोपदा ।
१२ यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥
१३ तत्कालस्तु तदात्वं स्या १४ दुत्तरः काल आयतिः ।

---

सिय' के ५ नाम हैं ॥ १–युक्तम्, औपयिकम्, लभ्यम्, भजमानम्, अभिनीतम्, नाय्यम् (६ त्रि), 'न्याययुक्त द्रव्यादि' के ६ नाम हैं ॥ २–संप्रधारणा (स्त्री), समर्थनम् (न), 'उचित और अनुचितका विचार कर निश्चय-करने' के २ नाम हैं ॥ ३–अववाद, निर्देशः, निदेशः (३ पु), शासनम् (न), शिष्टिः, आज्ञा (२ स्त्री), 'आज्ञा, हुकम' के ६ नाम हैं ॥ ४–संस्था, मर्यादा धारणा, स्थितिः (४ स्त्री), 'उचित मार्गपर रहने' के ४ नाम हैं ॥ ५–आगः (=आगस् न), अपराधः, मन्तुः (२ पु), 'अपराध कसूर' के ३ नाम हैं ॥ ६–उद्दानम्, बन्धनम् (२ न), 'बांधने या कैद करने' के २ नाम हैं ॥ ७–द्विपाद्यः (पु), 'दुगुने दण्ड' का १ नाम है ॥ ८–भागधेयः, करः, बलिः (३ पु) 'कर, मालगुजारी' के २ नाम हैं ॥ ९-शुल्कः (पु न), 'घाट जङ्गल और नदी आदिकी आमदनीसे दिये जानेवाले राज-भाग (टेक्स), का १ नाम है ॥ १०–प्राभृतम्, प्रदेशनम् (२ न), 'खुश करनेके लिये मित्रादिको दिये जानेवाले पदार्थ' के २ नाम हैं ॥ ११–उपायनम्, उपग्राह्यम् (२ न), उपहारः (पु), उपदा (स्त्री), भा० दी० मतसे 'राजाको दिये जानेवाले भेट नजराना' के ४ नाम हैं। प्राभृतम्..........देवता राजा मित्रादिको खुश करनेके लिये दिये जानेवाले भेट' के ६ नाम हैं ॥ १२–सुदायः (पु), हरणम् (न), 'यज्ञोपवीत आदिमें दी हुई भिक्षा या दामादको दिये जानेवाले दहेज' के २ नाम हैं ॥ १३–तत्कालः (पु), तदात्वम् (न), 'वर्तमान काल, बितते हुए समय' के २ नाम हैं ॥ १४–आयतिः (स्त्री),

१ सांदृष्टिकं फलं सद्य २ उदर्कः फलमुत्तरम् ॥ २९ ॥
३ अदृष्टं वह्नितोयादि ४ दृष्टं स्वपरचक्रजम् ।
५ महीभुजामहिभयं स्वपक्षप्रभवं भयम् ॥ ३० ॥
६ प्रक्रिया त्वधिकारः स्याऽच्चामरं तु प्रकीर्णकम् ।
८ नृपासनं यत्तद्भद्रासनं ९ सिंहासनं तु तत् ॥ ३१ ॥
१० हैमं छत्रं त्वातपत्रं ११ राज्ञस्तु नृपलक्ष्म तत् ।
१२ भद्रकुम्भः पूर्णकुम्भो १३ भृङ्गारः कनकालुका ॥ ३२ ॥
१४ निवेशः शिविरं षण्ढे १५ सज्जनं तूपरक्षणम् ।

---

'आनेवाले समय, भविष्यकाल' का १ नाम है ॥ १–सांदृष्टिकम् (न), व्यापार आदिके बाद शीघ्र मिलनेवाले फल' का १ नाम है॥ २–उदर्कः (पु), 'भविष्यमें होनेवाले फल' का १ नाम है ॥ ३–अदृष्टम् (न),'आगसे जलने पानीसे वह जाने आदि ( आदि पदसे व्याधि, दुर्भिक्ष, मरण, बहुत वर्षा, सुखार, मृग, मूषक' का संग्रह है ) के भय, का १ नाम है ॥ ४–दृष्टम् ( न ) 'अपने राज्यसे चोर जङ्गल आदिका भय तथा दूसरे राज्यसे दाह और चढ़ाई आदिके भय' का एक नाम है ॥ ५–अहिभयम् ( न ) 'अपने पक्ष ( मन्त्री आदि ) से होनेवाले राजा आदिके भय' का १ नाम है। ( "पक्षके ७ भेद हैं" ) ॥ ६–प्रक्रिया (स्त्री), अधिकारः (पु), "व्यवस्थाको ठीक करने' के २ नाम हैं ॥ ७–चामरम् ( चमरम्; चमरः पु, चामरा स्त्री ), प्रकीर्णकम् (२ न), 'चंवर' के २ नाम हैं ॥ ८–नृपासनम् , भद्रासनम् (२ न), 'मणि आदिके बने हुए राजाके आसन'के २ नाम हैं ॥ ९–सिंहासनम् (न), 'सुवर्णके बने हुए राजाके सिंहासन' का १ नाम है ॥ १० छत्रम् , आतपत्रम् (२ न), 'छाता' के २नाम हैं ॥ ११–नृपलक्ष्म (=नृपलक्ष्मन् न), राजाके छाता' का १ नाम है॥ १२–भद्रकुम्भः, पूर्णकुम्भः (२पु), मङ्गलके लिये जल से भरे हुए घड़े' के २नाम हैं॥ १३–भृङ्गारः (पु), कनकालुका (स्त्री), 'झारी, हुथहर' (स्वर्णके पात्र–विशेष)' के २ नाम हैं ॥ १४–निवेशः (पु), शिबिरम् ( ×शिविरम् । न ), 'सेनाके ठहरनेको जगह' के २ नाम हैं ॥ १५–सज्जनम् , उपरक्षणम् (२ न), सेनाकी रक्षाके वास्ते नियत किये हुए पहरे'

१ हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३३ ॥
२ दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः।
मतङ्गजो गजो नागः कुञ्जरो वारणः करी ॥ ३४ ॥
इभः स्तम्बेरमः पद्मी ३यूथनाथस्तु यूथपः।
४ मदोत्कटो मदकलः ५ कलभः करिशावकः ॥ ३५ ॥
६ प्रभिन्नो गर्जितो मत्तः ७ समावुद्वान्तनिर्मदौ।
८ 'राजवाह्यस्त्वौपवाह्यः ९ सन्नाह्यः समरोचितः' (१०)
१० हास्तिकं गजता वृन्दे ११ करिणी धेनुका वशा ॥ ३६ ॥
१२ गण्डः कटो १३ मदो दानं १४ वमथुः करशीकरः।

---

के २ नाम हैं ॥ १-सेनाङ्गम् (न) हाथी, रथ, घोड़ा और पैदल ये ४ सेना के अङ्ग हैं। ("नाव जहाज आदिका रथमें, किरात मल्लाह आदिका पैदलमें और भैंसा आदिका हाथीमें अन्तर्भाव होनेसे उनका पृथक् ग्रहण नहीं किया गया है") ॥ २-दन्ती (=दन्तिन्), दन्तावलः, हस्ती (=हस्तिन्), द्विरदः, अनेकपः, द्विपः, मतङ्गजः, गजः, नागः, कुञ्जरः, वारणः, करी (=करिन्), इभः, स्तम्बेरमः, पद्मी (=पद्मिन्। ×सामजः, सिन्धुरः, कुम्भी=कुम्भिन्। १९ पु) 'हाथी' के १९ नाम हैं। ("यहांसे श्लो० ४३ तक गजप्रकरण है") ॥ ३-यूथनाथः, यूथपः (२ पु), 'झुण्डके स्वामी' के २ नाम हैं। ४-मदोत्कटः, मदकलः (२ पु) मतवाले हाथी के २ नाम हैं ॥ ५-कलभः (×करभः), करिशावकः (२ पु), 'तीस वर्षसे कम उम्रवाले हाथीके बच्चे' के २ नाम हैं ॥ ६-प्रभिन्नः, गर्जितः, मत्तः (३ पु), 'जिसका मद गिर रहा हो उस हाथी' के ३ नाम हैं ॥ ७-उद्वान्तः, निर्मदः (२ पु), 'जिसका मद गिर चुका हो उस हाथी' के २ नाम हैं ॥ ८-[राजवाह्यः, औपवाह्यः (=उपवाह्यः। (२ पु), 'राजाके चढ़ने योग्य हाथी' के २ नाम हैं] ॥ ९-सन्नाह्यः, समरोचितः (२ पु), 'लड़ाईके योग्य हाथी' के २ नाम हैं] ॥ १०-हास्तिकम् (न), गजता (स्त्री), 'हाथियों के झुण्ड' के २ नाम हैं ॥ ११-करिणी, धेनुका, वशा (३ स्त्री), 'हथिनी' के ३ नाम हैं ॥ १२-गण्डः (भा० दी०), कटः (२ पु), 'हाथीके गाल' के २ नाम हैं। ("उपलक्षण होनेसे प्राणिमात्रके गालके भी ये दो नाम हैं") ॥ १३-मदः (पु), दानम् (न), 'हाथी के मद' के २ नाम हैं॥ १४-वमथुः, करशीकरः (२ पु), 'हाथीके सूंढ़से निकले हुए पानीके छींटे'

१ कुम्भौ तु पिण्डौ शिरसः २ तयोर्मध्ये विदुः पुमान् ॥ ३७ ॥
३ अवग्रहो ललाटं स्या४दीषिका त्वक्षिकूटकम् ।
५ अपाङ्गदेशो निर्याणं ६कर्णमूलं तु चूलिका ॥ ३८ ॥
७ अधः कुम्भस्य वाहित्थं ८ प्रतिमानमधोऽस्य यत् ।
९ आसनं स्कन्धदेशः स्यात् १० पद्मकं बिन्दुजालकम् ॥ ३९ ॥
११ पक्षभागः पार्श्वभागो १२ दन्तभागस्तु योऽग्रतः ।
१३ द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥ ४० ॥
१४ तोत्रं वेणुक१५मालानं बन्धस्तम्भे१६ऽथ शृङ्खले ।

---

के २ नाम हैं ॥ १–कुम्भः ( पु ), 'हाथीके मस्तकके ऊपरवाले दोनो मांस-पिण्ड' का १ नाम है ॥ २–विदुः (पु), हाथीके मस्तकके ऊपरवाले दोनों मांस-पिण्डोंके बीचवाले भाग' का १ नाम है ॥ ३–अवग्रहः ( +अवग्राहः । पु), ललाटम् ( न ), 'हाथीके ललाट' के २ नाम हैं ॥ ४–ईषिका ( +ईषीका, इषिका, इर्षीका । स्त्री ), अक्षिकूटम् ( न ), 'हाथीकी आँखके गोलाकार भाग' के २ नाम हैं ॥ ५–निर्याणम् ( न ), 'हाथीकी आँखके किनारेवाले भाग' का १ नाम है ॥ ६–चूलिका (स्त्री), हाथीकी कनपट्टी' (कानकी जड़वाले भाग)' का १ नाम है ॥ ७–वाहित्थम् (न), 'हाथीके शिरके ऊपरवाले दोनों मांस-पिण्डके नीचेवाले भाग' का १ नाम है ॥ ८–प्रतिमानम् ( न ), 'हाथीके दोनों दाँतोंके बीचवाले भाग' का १ नाम है ॥ ९–आसनम् ( न ), 'हाथीका कन्धा' अर्थात् 'हाथीवान्के बैठनेकी जगह' का १ नाम है ॥ १०–पद्मकम् (भा० दी०), बिन्दुजालकम् ( + विन्दुजालकम् । २न), 'हाथियोंके मुखमें कमलाकार छोटे २लाल चिह्न-विशेष' के २ नाम हैं ॥ ११–पक्षभागः (भा० दी०), पार्श्वभागः (२ पु ) 'हाथीके पार्श्वभाग (बगल), के २ नाम हैं ॥ १२–दन्तभागः (पु), 'हाथीके आगेवाले भाग' का १ नाम है ॥ १३–गात्रम् , अवरम् , (+ अबरम् , अपरम् । २ न), हाथीके आगेवाले जङ्घा आदि पूर्वार्द्ध शरीर और पीछेवाले जङ्घा आदि परार्द्ध शरीर' का क्रमशः १—१ नाम है ॥ १४–तोत्रम् , वेणुकम् ( + वैणुकम् । २ न), 'हाथी को मारकर चलाने वाले डण्डा या चाबुक आदि' के २ नाम हैं ॥ १५–आलानम् (न), 'हाथीको बांधनेवाले खूंटे या खम्भे' का १ नाम है ॥ १६–शृङ्खलम् ( त्रि ), अन्दुकः (+ अन्दूः स्त्री । पु), निगडः ( पु न), हाथीके

अन्दुको निगडोऽस्त्री स्या१दङ्कुशोऽस्त्री सृणिः स्त्रियाम् ॥ ४१ ॥
२ दूष्या कक्ष्या वरत्रा स्यात् ३ कल्पना सज्जना समे ।
४ प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४२ ॥
५ वीतं त्वसारं हस्त्यश्वं ६ वारी तु गजबन्धनी ।
७ घोटके वीतितुरगतुरङ्गाश्वतुरङ्गमाः ॥ ४३
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।
८ आजानेयाः कुलीनाः स्यु९र्विनीताः साधुवाहिनः ॥ ४४ ॥
१० वनायुजाः पारसीकाः काम्बोजा वा ह्लिका हयाः ।
११ ययुरश्वोऽश्वमेधीयो १२ जवनस्तु जवाधिकः ॥ ४५ ॥

---

बेड़ी ( बांधनेवाली सिकड़ी )' के ३ नाम हैं ॥ १–अङ्कुशः ( पु न ), सृणिः ( + श्रृणिः । स्त्री), 'अङ्कुश' के २ नाम हैं॥ २–दूष्या ( + चूष्या, चूषा मुकु० ) कक्ष्या, वरत्रा (३ स्त्री),'हाथी कसलेनेवाले रस्से' के ३ नाम हैं ॥ ३–कल्पना, सज्जना (२ स्त्री), 'गेरु आदिसे हाथीकी सजावट करने' के २ नाम हैं ॥ ४–प्रवेणी ( + प्रवेणिः । स्त्री ), आस्तरणम् ( न ), वर्णः, परिस्तोमः ( + वर्णपरिस्तोमः । २ पु), कुथः (पु स्त्री ), 'हाथीके झूल' के ५ नाम हैं ॥ ५–वीतम् ( न ), 'लड़नेमें असमर्थ हाथी घोड़े' का १ नाम है ॥ ६–वारी, गजबन्धनी (२ स्त्री), 'हाथीखाना' अर्थात् 'हाथी बांधनेकी जगह' के २ नाम हैं ॥ ७–घोटकः ( + घोटः), वीतिः ( + पीतिः), तुरगः, तुरङ्गः, अश्वः, तुरङ्गमः, वाजी ( = वाजिन् ), वाहः, अर्वा ( = अर्वन् ), गन्धर्वः, हयः, सैन्धवः, सप्तिः (१३ पु), 'घोड़े'के १३ नाम हैं । (यहांसे श्लो० ५० तक 'अश्वप्रकरण' है'')॥ ८–आजानेयः ( पु ), 'अच्छे घोड़े' का १ नाम है ॥ ९–विनीतः, साधुवाही (=साधुवाहिन् । २ पु), 'अच्छी २ चालसे शिक्षित घोड़े' के २ नाम हैं ॥ १०–वनायुजः ( + वानायुजः ), पारसीकः, काम्बोजः, बाह्लिकः ( + वाह्लिकः, वाह्लीकः बाह्लीकः । ४ पु ), 'वनायु, पारस, काम्बोज और वाह्लिक देशोंमें पैदा होनेवाले घोड़े' का क्रमशः १-१ नाम है। (किसी २ के मतसे प्रथम दो नाम 'पारसी घोड़े' के और अन्तवाले दो नाम उक्तार्थक हैं'') ॥११–ययुः, अश्वमेधीयः (भा० दी० । २ पु), 'अश्वमेध यज्ञमें छोड़े जाने वाले घोड़े' के २ नाम हैं ॥ १२–जवनः ( + प्रजवी = प्रजविन् ), जवाधिकः (भा० दी० ।

